Tel : "Samskrutam" दूरध्वनिः - "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आं. प्र.) भारतम्.

संपुटः १२ | 15 th DECEMBER 1974 | क्रमांकः १२



आनन्द-मार्गशिराङ्कः

शकाब्दाः १८९६

मूल्यम् ०-५० पैसाः

# विषयसूची









# भारत भारति !



भारत भारति भावय माम् ।
परिभावय विकृतान् धीविकृताम् ॥ ॥ भारत ॥

मलयजशिशिरे ! मञ्जुलमधुरे !
महाप्रभावभावितनरखचरे ! ॥ भारत ॥

नवरससरले ! नवगुणकोमले !
नटगायकरसनांचलशीतले ! ॥ भारत ॥

बहुमुखललिते ! बहुलपदयुते !
सहकृतबहुभाषापरिशोभिते ! ॥ भारत ॥

चकचकितांगे ! विकसितनिजरंगे !
सुकविनिकरकामितनिजसंगे ! ॥ भारत ॥



# सम्पादकीयम्

## लोकस्यावश्यकी क्षमा

लोकस्य भुवनस्य जनस्य च क्षमा आवश्यकी भवति। क्षमाविहीनः लोकः औन्नत्यम् लब्धुं न शक्नोति। तथा चेत् लोके यदिकश्चित् दूषयत्यस्मान् निन्दां करोति अवलेहनं च करोति तदा अस्माभिः क्षमां अवलम्ब्य तूष्णी मेव स्थातव्यं वा इत्ययं प्रश्नः लोकस्य मनसि उदेति। किन्तु निन्दादूषणतिरस्कारैः कोवा नष्टः संजायते मानवस्य इति विमृश्यमाने कश्चिदपि नष्टः काचिदपि हानिः नास्तीत्येवावगम्यते। अत्र निन्दा दूषण तिरस्कारादिभिः मानवस्य प्रथा लोके क्षीयते खलु इत्यस्य संशयस्य अवकाशो भवति। मानवस्य प्रथा आनुषङ्गिकी तात्कालिकी मानवभावनिर्णीता च भवति। न तु शाश्वतिकी। भगवतः विष्णुदेवस्य अवतारेषु वामनः बलिचक्रवर्तिनं बन्दी चकार। बलिचक्रवर्ती महादाता। तथाऽपि तस्य बन्धनं वामनेन कृतम्। तत्र कारणं किमिति विमृश्यमाने,तेन असुरचक्रवर्तिना देवाः पराजिताः अवमतिं प्राप्ताः निराश्रयाः अभवन्। एतेन बलिनः शौर्यं ज्ञायते। भगवान् सर्वसमः दीनजनोद्धारकः। तस्मात् देवानां मानसिक बाधां निर्मूलयितुं वामनरूपेण बलिं बन्धीकृत्य देवानां तोष मकल्पयत्। तद्वदेव सनकसनन्दनादीनां महर्षीणां शापेन पीडितौ भगवतः विष्णोः द्वारपालकौ जयविजयौ हिरण्याक्षहिरण्यकशिपू, रावणकुम्भकर्णौ;

शिशुपालदन्तवक्त्रौ नाम्ना प्रसिद्धौ अजायेताम् । भगवता विष्णुना तस्य द्वारपालकयोः जयविजययोः विषये प्रीतिरेव सन्दर्शिता । त्रिषु जन्मस्वेव स्वस्थानं प्रापितौ किल विश्वंभरेण महाविष्णुना । तथासति रामरूपधारिणः विष्णोः रावणकुम्भकर्णरूपधारिणोः जयविजययोश्च विद्वेषस्य अवकाश एव नास्ति किल । तद्वदेव वराहरूपधारिणः विष्णोः हिरण्याक्षरूपधारिणः विजयस्य नृसिंहरूपधारिणः विष्णोः हिरण्यकशिपरूपधारिणः जयस्य च विद्वेषस्य अवकाशः सुतरामेव नास्ति । तत्र स्थितः संबन्ध सेव्यसेवकरूपसंबन्ध एव भवति। सः संबन्धः सुप्रतिष्ठितः तात्विकश्च भवति। तथासति रामलीलोत्सवेषु अस्मद् भारते केषांचित् वैराश्येन रावण लीलोत्सवकरणाय प्रयत्नः । तत्प्रयत्नं शृत्वा तन्निवारयितुं केषांचित् प्रयत्नश्च वर्तते इति मनसि खेदं संजायते सहृदयानां। मूलपुरुषयोः रामरावणयोः अविद्यमानं याथार्थवैरं आधुनिकाः वयं परिकल्प्य किमर्थं विद्वेषपूरिताः भवेम। तेन को वा लाभ संजायते अस्माकं । लीलामानुषविग्रहः श्रीरामः लीलाराक्षसविग्रहः रावणः। तेन किं ज्ञायते इति चेत् रामे मनुष्यत्वं नास्ति; रावणे राक्षसत्वं च नास्ति याथार्थं । तावुभौ देवौ तावुभौ सेव्यसेवकौ, तावुभौ भक्त, भक्तपालकौ इति ज्ञात्वा वयं क्षमामवलम्ब्य तिष्ठेम इति भगवन्तं प्रार्थयामहे ।



## पूज्यपाद श्रीगङ्गेश्वरानन्दस्वामिनां जीवितसंग्रहः

परमपूज्यः स्वामिरयं प्राज्ञचक्षुः (चर्मचक्षुषा हीनः) इदानी मस्य वयः (९४) चतुर्णवतिवत्सराः। उदासीनसम्प्रदायानुयायी, यः सम्प्रदायः ब्रह्मणः पुत्रेषु चतुर्षु सनत्कुमारसम्बन्धी। उदासीन-सम्प्रदायार्येषु अयं १८२ द्व्यशीत्युत्तरशततमः। अयं १८८१ वर्षे डिशम्बर २४ तिथौ पञ्जाबदेशे प-रामदत् सरलादेव्यो पुत्रता-मलभत। अस्य बाल्यनाप चन्द्रशेखरः। पञ्चवर्षीयोऽयं बालः पितृभ्यां सह श्रीकृष्णदर्शनार्थं बृन्दावनमगच्छत्। मशूचीबाधितोयं बालस्तदानी मन्धस्समभवत्। बृन्दावनप्राप्तिपूर्वमेवास्य कृष्ण-दर्शनमभूत्। सांसारिकजगदवलोकननिरुद्ध मस्य चक्षु र्भगवता पिनद्धम्। उदासीनसम्प्रदायाचार्यः श्रीरामानन्दस्वामी चन्द्रशेखर-मनुगृहीतवान्। विष्णुसहस्रनामस्तोत्रं, भगवद्गीतां च सदा पठितुमेनमादिदेश। चतुस्त्रिंशतितमे वयसि अयं सन्यासं स्वीचकार। ततःपर गङ्गेश्वरानन्द इति नामाभूत्। गुरूपदेशेन काशीं गत्वा तत्र न्यायव्याकरणमीमांसावेदवेदाङ्गानि अभ्यस्तवान्। यद्यत् अनेन श्रूयते तत्तत् अस्य स्मृतिपथान्नावरोहति। सुचक्षुरपि तावताल्पकालेन एतानि शास्त्राण्यध्येतु मसमर्थं एव। अयं साधुभि स्सह भारते पुण्यतीर्थानि पुण्यस्थलानि चागमत्। अयमुत्तरभारते अनेकशैक्षणिकशालानां प्रचालकः वर्तते। लाहोरनगरे सनातनविद्यालयः, काश्यां उदासीन संस्कृतविद्यालयः, अन्यत्र च अनेकाः अस्य स्वामिनः प्रयत्नबला-न्निर्मिता इदानीमपि राजन्ते।



# अभिनववासवदत्ता

कर्ता – को. शे. वट्टिपल्लि नरकण्ठीरवशास्त्री.

[ पूर्वानुबन्धः ]

स्वप्ने स राजपुत्रोऽस्वप्नैणाक्षीमिव व्यलोकयत ।
कन्यां त्रिभुवनमान्या मन्यादृशरूपसम्पदा धन्याम् ॥ ॥ ३९ ॥

सृष्टा मिवाऽङ्गजनुषा दृष्टादृष्टावलग्नलसमानाम् ।
अष्टापदतुलिताङ्गी मष्टादशवर्षदेशीयाम् ॥ ॥ ४० ॥

जघनमृगाङ्कपरिधिना रोमाळिलतालवालवलयेन ।
काञ्चनकाञ्चीदाम्ना काञ्चन सुषमां नितान्त मञ्चन्तीमु ॥ ४१ ॥

अनयो स्स्तनयो र्घनयो रयि मयि पातो भवे दितीव भिया ।
स्पृशता कृशतां दिशताऽवशतां ललितावलग्नभागेन ॥ ॥ ४२ ॥

स्मरलीलासदनाभ्यां स्मरमोहनचूर्णपूर्णकलशाभ्याम् ।
रुचिरां पयोधराभ्यां हृदयसरः कनककमलमुकुळाभ्याम् ॥ ४३ ॥

अधरेण पल्लवरुचा मधुरेणाऽधरयता सुधाऽस्वादम् ।
लसमाना मसमाना मनुरागाब्धिप्रवाळशकलेन ॥ ॥ ४४ ॥

वरकुन्दकुट्मलश्रीसदनै रुज्जृम्भमाणमदमदनैः ।
रदनै र्भूषितवदनै र्विलसन्तीं मौक्तिकैश्च कृतकदनैः ॥ ४५ ॥

तरुणजनहृदयकरिणा मालानस्तम्भविभ्रमं दधता ।
नासावंसेन युतां नयनामृतसिन्धुसेतुबन्धेन ॥ ॥ ४६ ॥

रतिपञ्चबाणधनुषो रतिवेलविलासवैखरीभाग्भ्याम् ।
ललितां भ्रूलतिकाभ्यां नयनोत्पललीनमधुपरेखाभ्याम् ॥ ४७ ॥

परिपूर्णमुखसुधांशो रङ्कूरयता कलङ्कबिचिकित्साम् ।
तिलके नाञ्चितनिटलां मृगमदकर्दमसुसूक्ष्मरचितेन ॥ ४८ ॥

अथ तां तरळदृगन्तां कान्तां दृग्भ्यां पिबन्निवाऽऽदरतः ॥
जनितेर्ष्ययेव सहसा चिरसेवितया स निद्रया मुमुचे ॥ ४९ ॥

तदनु स मदनशराळीशरव्यतापन्नमानस स्तरुणः ।
विषसरसीव निमग्नं बद्धो न शशाक धर्तु मात्मानम् ॥ ५० ॥

स तदालिङ्गनकुतुकी क्षण माकाशे प्रसार्यमाणभुजः ॥
सकलासु दिक्षु पश्यन् लिखितामिव ताऽमथाऽऽजूहावेत्थम् ॥५१॥

एह्येहि चन्द्रवदने माऽगा स्तव चरणदासमवधूय ।
शीतलय मा मपाङ्गै रङ्गजसंतप्त ममृतरसभङ्गैः ॥ ॥ ५२ ॥

अयि मयि दयिते दयते दासजने ननु कथं न हृदयं ते ।
मा चिरय सरय मधरं मधुरं मे देहि पातुमामोऽस्मि ॥ ५३ ॥

कामिनि कामयमानं कामसमानं विकामलसमानम् ।
मनुजाधिपतनुजातं मामऽतिसन्धाय किमिति यास्यऽधुना ॥५४॥
अङ्कमलङ्कुरु बाले, पङ्कजनयने समीहितं कुरु मे ।
किङ्कर मुज्जीवय ते मकराङ्कातङ्कमोचना देनम् ॥ ॥ ५५ ॥
अथ शय्यातलशयितो निबारिताशेषपरिजनप्रसरः ।
निखिलोपभोगविमुखो निन्ये कृच्छ्रेण दिवसरजनी ते ॥ ५६ ॥
तदनु प्राणसमानः प्रियसुहृदऽस्योपसृत्य मकरन्दः ।
कन्दर्पकेतु मूचे कन्दर्पशरप्रहारपरितप्तम् ॥ ॥ ५७ ॥
किमिद मसाम्प्रत मयसेऽधुजनाचरित मेन मध्वानम् ।
सन्तः प्रेक्ष्य भवन्तं निवसन्ति सखे वितर्कडोलासु ॥ ५८ ॥
सम्प्रति लब्धावसरा रचयन्ति सखे खला स्तवाऽनिष्टम् ।
सतत मनिष्टोद्भावननिरतं हृदयं हि भवति पिशुनस्य ॥ ५९ ॥

कुरु चेतसि मम वचनं चर साधुजनोचिते सखे चरिते ।
विरम विगीताचरितात् स्थिर मात्मानं विधेहि भज धैर्यम् ॥६०॥

इति कथयति मकरन्दे मृदुबचनन्याससहितमकरन्दे ।
कन्दर्पकेतु रेनं परिमितवर्णं शनै रुवाच गिरम् ॥ ॥ ६१ ॥

अय मुपदेशावसरो न भवति भवत स्सखे दशां श्रुणु मे ।
अङ्गा न्यङ्गजतत्पा न्यङ्गीकुर्वन्ति सपदि भङ्गुरताम् ॥ ६२ ॥

पच्यन्त इवाऽङ्गानि क्वाथ्यन्त इवेद्रियाणि सकलानि ।
भिद्यन्त इव विवेकाः कामऽपि कष्टां दशां प्रपन्नोऽस्मि ॥६३॥

अल मल मनया कथया यदि सौहृद मीदृसे निसर्गेण ।
आगम्यता मिदानी ममुना साकं जनेन दीनेन ॥ ॥ ६४ ॥

इत्युक्त्वा तेन समं प्रययौ केनाऽप्यलक्षित स्सहसा ।
अतिचक्राम तदानी मध्वान मनेकनल्वशतमात्रम् ॥ ६५ ॥

तत्र ददर्श मृगेद्रत्रस्तकुरङ्गीकुलाकुलोपान्तम् ।
कलशजवचसा संहृतशिखरसहस्रं स बिन्ध्यशैलेन्द्रम् ॥ ६६ ॥

शिखर चरद्विद्याधरगीतश्रवणात्रिवेलसुखितानाम् ।
चमरीणां हननोत्कै श्शबरै रारचितसानुसम्बाधम् ॥ ६७ ॥

बहुकुसुमविचित्राभि र्ललिताभि र्वंशपत्रपतिताभिः ।
परितः प्रहर्षिणीभिः प्रकटितवृत्तक्रमं लताततिभिः ॥ ६८ ॥

शैवालजालकचया शफराक्ष्या कमलमुकुळघनकुचया ।
आवर्तनाभिबिलया परिरब्धं रेव योर्मिभुजलतया ॥ ६९ ॥

अतिलङ्घ्य राजसूनुः कतिपयदूरं कथञ्चि दध्वानम् ।
अञ्चितशाखानिचयं कञ्चन जम्बूतरुं व्यलोकयत ॥ ७० ॥

तदनु स सुमसुकुमार स्तरणिकरस्पर्शविह्वलितगात्रः ।
छायायां तस्य तरो रायासभरालसो विशश्राम ॥ ॥ ७१ ॥

अथ भुवनत्रयदीपे चरमाचलतुङ्गशृङ्गमारूढे ।
अम्बुजिनीप्रियबिम्बे बिम्बफलाडम्बरं विडम्बयति ॥ ७२ ॥
फलमूला न्यादाय प्रादा दस्मै प्रियाय मकरन्दः ।
स्वयमपि जग्राहैष प्रियसुहृदुपभुक्तशेषाणि ॥ ॥ ७३ ॥
प्रतिनवपल्लवतल्पे प्रियसुहृदा कल्पिते स सुष्वाप ।
पश्य न्निव हृत्फलके दयितां संकल्पतूलिकालिखिताम् ॥ ७४ ॥
अथ जम्बूतरुशिखरे मिथ स्स कलहायमानयोर्भूयः ।
श्रुत्वा शुकशारिकयोः कलकल माद्ये विभावरीयामे ॥ ७५ ॥
श्रुणुव श्शुकशारिकयोः रनयो रालाप ममृतरसमधुरम् ।
इति मकरन्द मवोच त्सुहृदं कन्दर्पकेतु रतिकुतुकी ॥ ७६ ॥
कथ कथयामास शुकं प्रकोपतरळाक्षरां गिरं शारी ।
अम्नि शारिकान्तररतः कथ मथवा कितव रात्रि रियती ते ॥७७॥
तदनु तदाऽऽकर्ण्य शुकः प्रिया मयं शारिका मुवाचेदम् ।
भद्रे त्यज मयि रोषं श्रुणु मे कालातिलङ्घने हेतुम् ॥ ७८ ॥
दयिते, काचि दपूर्वा महती प्रत्यक्षलक्षिताऽद्य कथा ।
तत इयती मे रात्रि र्जाता नाऽन्यत्र यातोऽस्मि ॥ ॥ ७९ ॥
अथ जातकुतूहलया प्रणयिन्या भूयसा सनिर्बद्धः ।
मृदुमधुररचनवचनै स्सपदि कथां कथयितुं समारेभे ॥ ८० ॥
अस्ति सुविस्तृतविपणिन्यस्तसमस्तप्रशस्तवस्तुगणम् ।
दुस्तलनिस्तुलपरिघं कुसुमपुरं खल्वपास्तदेवपुरम् ॥ ८१ ॥
मन्दरगिरिशिखरै रिव मसृणसुधालेपधवलवप्रान्तैः ।
बलिभवनै रिव सुतलोद्भासिभि रुपलक्षितं सदनैः ॥ ८२ ॥
मरुतेव सत्पथजुषा विवस्वतेव प्रकृष्टगोपतिना ।
अनुगत मविरतधर्मानुष्ठितिशीलेन पौरजालेन ॥ ॥ ८३ ॥

[ अनुवर्तते ]

# सुभाषितानि

श्री. यन्. रामनाथार्यः

[ पूर्वानुबन्धः ]

नादत्तमिच्छेन्न पिबे न्न मद्यं
प्राणान् न हिंसेत् न वदेच्च मिथ्या ।
परस्य दारान् मनसाऽपि नेच्छेत्
यस्स्वर्गमिच्छेत् गृहवत्प्रवेष्टुम् ॥ ५५६ ॥

One who desires to enter heaven as easily as he would his own house, should not covet others wealth, should not drink liquors, should not harm others, should not utter falsehood, and should not think of others wives with evil intention.

शाठ्येन मित्रं कपटेन धर्मं परोपतापेन समृद्धभावम् ।
सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये नूनमपण्डितास्ते ॥

They are really foolish who try to acquire friends by fraud, religious merit by hypocracy, abundance of wealth by inflicting pain on others, gaining knowledge by indulging in comforts and women by harshness.

यदि जन्म जरामरणं न भवेत्
यदि चेष्टवियोगभयं न भवेत् ।

यदि सर्व मनित्यमिदं न भवेत

इह जन्मनि कस्य रति र्न भवेत् ॥ ॥ ५५८ ॥

Who will not feel happy with this life, if the cycle of birth growth and death donot occur; if there is no fear of separation from one's dear relations; and if everything does not become impermanent.

चला विभूतिः क्षणभंगि यौवनं

क्रुतान्तदन्तान्तरवर्ति जीवितम् ।

तथाप्यवज्ञा परलोकसाधने

नृणामहो विस्मयकारि चेष्टितम ॥ ॥ ५५९ ॥

Riches are impermanent; youth is shortlived; life is caught in the jaws of death; yet strange is the behaviour of human beings that they feel ashamed of doing things conducive of their happiness in the other world.

सम्पदो जलतरंगविलोलाः यौवनं त्रिचतुराणि दिनानि ।

शारदाभ्रपरिचश्चल मायुः, कि धनैः परहितानि कुरुध्वम् ॥

Riches are unsteady as the waves on waters; youth lasts only for a few days; life is as fickle as the autumn clouds; considering all this what is the use of ones wealth; always do good to others.

# आनन्द – उत्तरायणपरीक्षाणां सन्नाहकार्यक्रमः
## संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ. प्र.)
## Programme of March 1975 Examination.

| विना विलम्बशुल्कं आवेदनपत्राणां प्रेषणायान्तिमावधिः | १ रू. विलम्बशुल्केन सह आवेदनपत्र-प्रेषणाय अन्तिमावधिः | परीक्षाणांप्रचलनसमयः 1975 मार्च मासे |
|---|---|---|
| 20—1—75 | 31—1—75 | कोविदः 8, 9, 10 तिथिषु, विचक्षणसमर्थौ 8, 9 तिथ्योः, परिचयाभिज्ञे 8 तिथौ |

संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आं० प्र०)
15—12—74.

**कौ. श्रीनिवासाचार्यः,**
परीक्षामन्त्री.

## सूचनाः

१. प्रेषितं परीक्षाशुल्कं कथंचिदपि न प्रत्यर्प्येत न परिवर्त्येत, न वा स्थाप्येत । अतः आलोच्य आवेदनपत्रं परिपूर्य प्रेषणीयं ।

२. न्यूनतया प्रेषितं शुल्कं न कार्यकरि भवेत् । अतः यावदावश्यकं आलोच्य एकदैव प्रेषणीयं ।

३. न्यूनशुल्कं आवेदनपत्रं तच्छुल्केन सह व्यर्थं भवेत् । अतः शुल्कस्य आवेदनपत्राणां च अत्यंतसंगतिरावश्यकी ।

४. लेखे आवेदकानां नामानि, तच्छुल्कस्य प्रत्येकविवरणं चावश्यकानि ।

५. विशेषानुमति (Examption) कृते एकमासात्पूर्वमेव ५–०० रूप्यकाणि, पृथक् योजनीयानि तत्तदावश्यकयोग्यातापत्राणि प्रेषयित्वा अनुमतिर्गृहीतव्या ।

६. एकस्मिन्नगरे बहूनि केन्द्राणि नांगीक्रियेरन्, नैकमपि पञ्चन्यूनाभ्यर्थिसत्वे, न वा समीपस्थेऽन्यकेन्द्रे ।

७. केन्द्रस्थापनविषये न केवल विद्यार्थिनां सख्या प्रधानं, अपि तु दुराचाराणां असंभवोपि परिशील्येत परीक्षामन्त्रिणा ।

८. यं कमपि अंशमनपहाय आवेदनपत्रं पूरणीयम् अन्यथा नांगीक्रियेत ।

# संस्कृतभाषाप्रशस्तिः

रचयिता – के. आर्. सुब्रह्मण्यः M A., हैदराबाद् ।



वेदाश्च स्मृतयः पुराणनिवहाः
षड्दर्शनान्यागमाः,
वेदाङ्गानि तथेति हासनिकरः
तन्त्राणि मन्त्राणि च ।
दृश्यश्रव्यमय श्च काव्यनिचयः
स्तोत्राणि भाष्याणि वा,
यस्यां वाचि लसन्ति सा विजयते
दिव्या तथा संस्कृता ॥

वल्मीकजन्मना यस्यै मौलिरत्नं समर्पितम् ।
पाराशर्येण ताटङ्कं भासेन करभूषणम् ॥

ललामं कालिदासेन चाञ्जनं भवभूतिना ॥
भट्टबाणेन केयूरं तथा हर्षेण मेखला ॥

श्रीहर्षेण च कौशेयं जगन्नाथेन वर्णकम् ।
पतञ्जलिमुखैर्भाष्यकृद्भिः पादाङ्गदं शुभम् ॥

दण्डिभारविमाघाद्यै भूषणानि पृथक् पृथक् ।
तां वन्दे संस्कृतां वाणीं सर्वालङ्कारभूषिताम् ॥

यत्संस्कृतिर्भारतभूविभागे
पुरातनी नित्यनवा चकास्ति ।
नमामि देवीं सुरवाग्विभूतिं
लोकद्वयास्यापि सुसाधिकां ताम् ॥

# संस्कृताभ्यासकानां महानवकाशः



आन्ध्रप्रांतीय श्रीकाकुलमण्डले, बोब्बिलिनगरस्थ "विज्ञान विवर्धिनीपरिषदः याजमान्येन अधोनिर्दिष्टासु तदीयासु शाखासु, चित्तूरु संस्कृतभाषाप्रचारिण्या सभया प्रचाल्यमानाः परीक्षाः दित्सूनां विद्यार्थिनां शिक्षणं दीयते।

तन्मण्डलीयाः संस्कृताभ्यासोन्मनाः युवानः उद्यममेतं सफलं कुर्युरिति महानानन्दः।

विज्ञानविवर्धिनीपरिषदः शाखाः —

१. **बोब्बिलि – श्री यस्. रामगोपालशास्त्री,**
वि. वि. परिषदः कार्यदर्शी, अग्रहारं वीथी।

२. **तेर्लां-(राजां) श्री जि. कृष्णमूर्तिनायुडु** M.A., B.ED.,
वि. वि. परिषद्, अध्यक्षः (तेर्लां)

३. **यम्. आर् नगरम् – श्री यम्. सत्यनारायणः** B.A., B.ED.,
अप्पर् प्रैमरीस्कूल् (पार्वतीपुरम्)

४. **पार्वतीपुरम् – श्री पि. वि. बि. श्रीराममूर्तिः,**
आन्ध्राध्यापकः, आर्. सि. यम्. हैस्कूल्।

५. **चित्ताड (बोब्बिलि) बि. सिंहाचलम्** B.A., B.ED.,



# प्रमाणपत्रप्रदानोत्सवः



२७—११—७४ गुण्टूरु – संस्कृतभाषाप्रचारिण्या सभया प्रचाल्यमानासु परीक्षासु उत्तीर्णानां विद्यार्थिनां प्रमाणपत्रप्रदानोत्सवसभा महता संरंभेण प्रचलिता। सभायाः उन्नतपाठशाला-प्रधानोपाध्यायः श्री वल्लूरु जगन्नाथरायः बि. ए., वि यस्सि., बि. ईडि. अध्यक्षता मवहत्।

श्री शनगवरपु अश्वत्थनारायण संस्कृतभाषाप्रचारिण्या सभया क्रियमाणं संस्कृतभाषायाः सेवाप्रचारादिक मुद्दिश्य न्यवदत्। श्री जि. यल्. यन्. शास्त्री संस्कृतस्य औन्नत्यमधिकृत्य न्यवेदयत्। श्री पोलिशेट्टि सोमसुन्दरस्य स्मृतिचिह्नतया, तत्तनयः श्री सीता रामाञ्जनेयः परीक्षासु द्वितीयश्रेण्या मुत्तीर्णानां (१६) षोडश विद्यार्थिना मुपरिपरीक्षोपयोगिपुस्तकार्थं धन प्रादात्। अध्यक्षः दातारं विद्यार्थिनश्च प्रशंसन्, आगामिपरीक्षार्थं शताधिक-विद्यार्थिनः इदानीं पठन्तो वर्तन्त इति, अन्येपि कक्ष्यासु प्रवेष्टु-मीहन्त इति, संस्कृतपठनस्याऽऽवश्यकत्वं चोद्दिश्य गम्भीरमुपन्यास-मदात्।

अन्ततः श्री एका वासुदेवरायः, श्री सीतारामाञ्जनेयस्यौदार्यं संस्कृतप्रियतां चोद्घाटयन् सदस्यानां वन्दनसमर्पणमाचचार।



# उपसंघस्थापनमहोत्सवः ( गूडूरु )



उपसंघकार्यदर्शी श्रीमान् बि. रङ्गाचार्यः, लयन्स् क्लब् गवर्नर् श्री श्रीनिवासरायं पुष्पमालालंकृतं करोति ।



श्री श्रीनिवासरायः दीपं प्रज्वालयति ।

गूडूरु लयन्स् क्लब् अध्यक्षः, सं. भा. प्र. सभायाः उपसंघस्य उपाध्यक्षः श्री डा. सि. आर्. रड्डिमहाशयः तिष्ठन् प्रेक्षते ।

चित्तूरु संस्कृतभाषाप्रचारिण्याः सभायाः उपसङ्घः, आन्ध्रप्रदेशाऽवतरणदिने १—११—७४ तिथौ नेल्लूरु (सिंहपुरि) मण्डलान्तर्गतगूडूरुनगरे महिलामण्डलीभवने महता संरम्भेण समारब्धः । लयन्स क्लब् गवर्नर् श्री यन्. श्रीनिवासरायमहोदयः

शुभसूचकतया दीपं प्रज्वाल्य, संस्कृतभाषायाः प्राशस्त्यं, अवश्यपठनीयत्वञ्चोद्दिश्य सुविस्तरमुपन्यासमकरोत्। ततः विद्वान् शिरोमणिः श्री बहुजनपल्लि रङ्गाचार्यः M. A. (प्रधानान्ध्रपण्डितः) संस्कृतभाषायाः अनादित्वं - बहुभाषामूलत्वं - संस्कृतिसेवधित्वादिकं विपुलीकुर्वन् गम्भीरमुपन्यस्तवान्। गूडूरु लयन्स-क्लब् आध्वर्येण, संस्कृतकक्ष्याणां प्रचलनार्थं, संस्कृतस्य विस्तरणार्थं च यथाशक्ति, साहाय्यं करिष्यत इति तत्सङ्घाध्यक्षः डा. श्री सि. आर्. रेड्डिमहोदयः अगदत्। श्री सि. वि. कृष्णार्यः उदारतया षोडशोत्तरशतरूप्यकाणि (रू. ११६-००) सभायै व्यतरत्। प्रत्येक पञ्चविंशतिरूप्यकाणि संस्कृतभाषाप्रचारिणीसभायै दत्वा सोत्साहं पश्चविंशतिसंख्याकाः जीवितसभ्याः समभवन्। साधारणसभ्यतां प्राप्तुमनेके स्वाऽभिलाषं सभायां प्रकटीचक्रुः। गूडूरुनगरे - जानकिरामपेटायां, श्री अलघनाथस्वामिदेवालये च, नियततया संस्कृतकक्ष्याः प्रचालनीया इत्यप्युपसङ्घेन निर्णयः कृतः। पौराः, स्त्रियः, विद्यार्थिनः अनेके सभां समाविष्टाः। एवंरूपकार्यक्रमेण, उपसङ्घस्थापनसभा समापिता।

उपसङ्घस्य कार्यवर्गः —

अध्यक्षः — **श्री सि. वि. कृष्णार्यः,**
प्रिमियर् मैका कम्पेनी (गूडूरु)
उपाध्यक्षौ – **श्री डा० सि. आर्. रेड्डिः** (गूडूरु)
**श्री डा० के. सीतारामार्यः** (गूडूरु)
कार्यदर्शी — **श्री ब. रङ्गाचार्यः** M. A. (प्रधानान्ध्रपण्डितः)
कोशाधिकारी – **श्री बत्तेन राघवार्यः**, गूडूरु।

"गूडूरु नगराणा मुत्कलिका या हि संस्कृतोद्धरणे।
सैव तु भूया द्भगवत्कृपया, परयाऽद्य भारतीयानाम्॥"

इत्याशास्यतेऽस्माभिः।



# योग्यतापत्र प्रदानोत्सवः





संस्कृतभाषाप्रचारिणी सभायाः गूडूरु उपसङ्घस्य समावेशः ४—१२—७४ दिने जानकिरामपेट सस्कृतपाठशालायां आसीत्। अध्यक्षः श्री सि. वि. कृष्णय्या, उपाध्यक्षाः डा० सि. आर्. रेड्डि, डा० के. सीतारामय्या महाशयश्च संस्कृतभाषाध्ययनं प्रत्यबोचन्। अध्यक्षः विद्यार्थिनां योग्यतापत्राणि ग्रन्थान् च बहूकृतवान्। श्री सि. वि. कृष्णय्या, सि. आर्. रेड्डि महोदयाः गूडूर् केन्द्रे परिचय, अभिज्ञ, परीक्षासु प्रथमस्थानं प्राप्तानां विद्यार्थिनां ऐकैकं पञ्चाशत् रूप्यकाणि प्रदातुं, द्वितीयस्थानं प्राप्तानां विद्यार्थिनां एकैकं पञ्चविंशति रूप्याणि प्रदातुं डा० सीतारामय्या महाशयश्च प्रकटितवन्तः। श्री आर्. वीरराघवुलुना वन्दनसर्पणं कृतम्।

# हेमन्तऋतुः

रचयिताः – काव्यतीर्थः, ज. व्य. पल्लेवरः, महाराष्ट्र ।



नवप्रवालप्रभया प्रसन्नः
प्रफुल्ललोध्र स्तबकावकीर्णः
प्रमत्तकादम्बरवेण रम्यः
हेमन्तकाल हरते मनांसि ।

मृगांगनावृन्दविलोभनीयः
कामान्धकादम्बविलासरायः
कौंचाप्रियक्रीडनकेलिरायः
हेमत्तकाल हरते मनांसि ।

चेतोहरैः लेपनचारुगन्धैः
प्रमादकैः मण्डितयोषितानाम्
विलासिनीनामनुरागिणीनाम्
हेमन्तकाल हरते मनांसि ।

हेमन्तवातेन बिलोलकायः
हिमप्रपातात्धृतशुक्रकायः
हेमन्तशीर्षे स्थितमार्गशीर्षः
हेमन्तकाल हरते मनांसि ।

विशालशालीवनवस्त्रधूना
तुषारकुन्देन्दुनिभा धरित्री
उत्फुल्लनीलोत्पल नेत्ररम्या
हेमन्तशक्ति हरते मनांसि ।





# गान्धीकथा

बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

सर्वेश्वरस्य भगवतः विशेषणेषु कानिचन "भक्तपराधीनः, भक्तोद्धारधुरन्धरः, शरणागतरक्षकः इत्यादीनि । महाराष्ट्र-साधुवरेण्यः तुकारामः जगौ "प्राणा अपि त्यक्तुं शक्या न मे दैवमाराध्यम्" इति। भगवतापि प्रतिज्ञा कृता "सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यः ददाम्येतद्व्रतं मम" इति।

महात्मा गान्धी महोदयोऽपि भगवति महच्छ्रद्धावान् । तस्य नित्यजीवने भानोः प्रार्थनां विना न गमनागमने । तस्य विश्वास आसीत् भगवान् एकः रक्षकः भक्षकश्चेति ।

'साबरमति' आश्रमस्याऽऽरम्भदशा । गांधी प्रकटयत् "आश्रमे मे अंत्यजानां हरिजनानां प्रवेशावकाशो दीयत" इति । तदनुसृत्य कश्चन हरिजनपरिवारः तत्र वाससौख्यमलभत ।

"तत्संसर्गी च पञ्चमः" इति स्मृतिशास्त्रवचनविश्वस्ताः सनातनधर्मावलम्बिनः केचन अहमदाबादीयाः आढ्याः वणिजः गांधी महाभागस्यामुं व्यवहारं प्रति विरोधं प्रदर्श्यात्मनः क्रोधं निवेदयामासुः । "आश्रमस्य द्रव्यसाहच नितरां तेभ्यं एव लभते स्म । अधुना तु ते कथं सहयोगं यच्छेयुः ?"

आश्रमस्य व्यवस्थापक आसीत् महात्मनः भ्रातृव्यः "मगन-भाई" । दक्षिण-आफ्रिकावासमारभ्य गान्धी महाभागस्याखिलेषु

रचनात्मककर्मसु स एव सहयोगी आसीत्। दिने चैकस्मिन् सायं प्रार्थनानन्तरं महात्मानं प्रति सोऽवदत्। "बापूमहाशय! इदानीं कुटीरस्याऽवस्था दयनीया वर्तते। अहमदाबादनिवासिनः सर्वेपि धनिका व्यापारिणः आश्रमस्य हरिजनप्रवेशदिनादारभ्या द्विरोधिनो वर्तन्ते। तैरद्य साह्यदानं सर्वथा स्थगितम्। आश्रमे भोज्यवस्तुनोऽभाव एकत्र अपरत्र धनकोशरिक्तता। एकापि काकिणी हस्ते नाऽस्ति, किं कर्तव्यतामूढोऽस्मि" इति।

"भ्रातः! अस्य चिंतां मा कुरु। भगवान् दीनजनरक्षकोऽवश्यमस्ति। किं त्वं विस्मृतः भगवद्वचनम् "योगक्षेमं वहाम्यहम्" इति।

प्रशान्तचित्तस्य महात्मनः उत्तरं श्रुत्वा "मगनसहोदरः" तूष्णीमभवत्।

तस्मिन्नेव दिने रजन्यां कश्चनाऽऽढ्य आश्रमसन्दर्शनार्थऽऽमाययौ। निखिलमपि आश्रमस्य कार्यविशेषं दृष्ट्वाऽधिकं तृप्तः सः दशसहस्रमुद्राणां द्रव्यादेशपत्रं (Cheque) दत्त्वाऽगच्छत्।

### एकश्लोकी

यन्माता त्रिशिला मदीयजनकः सिद्धार्थनामा तथा
कुण्डग्रामजनिश्च यस्य सुमतिर्योवर्धमानाह्वयः।
सम्यक्ज्ञानमवाप घोरतपसा यः काननाभ्यन्तरे
तं तीर्थंकरमन्तिमं जिनमहावीरं भजे सादरम्॥



श्रीः

# कुत्र सत्यं ? कुतो नीतिः ?

रचयिता – ना. न. निगमान्तः, प्रोद्दुटूरु ।



विजयपुरस्थ संस्कृतकलाशालातः अध्यापकपदवीं स्वीकर्तुं कलाशालाध्यक्षप्रेषितं सूचकपत्रं ह्यः सायमासादितम् । तदर्थं प्रस्थितोऽहं अदृष्टपूर्वं नगरन्तदवाप्य, मन्मित्रनिर्दिष्ट बन्धुगृहं यत्नतो ज्ञात्वा तदन्तः प्राविशम् । सशङ्कं द्वारि तिष्ठन्तं मां दृष्टवा, उन्नतासनोपविष्टः वृद्धः कश्चन झटित्युत्थाय स्वोपनेत्रं समीकुर्वन् मदभिमुखमागत्य "आगच्छतु! आगच्छतु!! इत्य सकृदुच्चरन् तत्र स्थिते कस्मिश्चनासने मामुपावेशयत् । अथ कुशलप्रश्नादिकं कृतम् । मत्सम्भाषणं श्रुत्वा पाकशालास्थिता तद्गृहिण्यपि तत्रागता । पूर्वेद्युः प्रातरेव भवदागमनमधिकृत्य गोपालेन लेखितं पत्रमवाप्तम् । भवद्दर्शनेन महान् सन्तोषो जायते । अयमेव विश्रान्तियोग्यः भवदीयोपवर्गः । कञ्चुकादिकमपनीय विश्रान्तिः स्वीक्रियताम् । स्नानपानाद्यर्थं सर्वमचिरादेव सज्जीकरिष्यते इति व्याहरन्नेवान्तरगात् गृहस्वामी। नेतृप्रेरितो यन्त्र इव कर्तव्यं क्रमेण आचरन्नहं भोजनानन्तरं ईषद्विश्रम्य गन्तव्यां कलाशालां द्रुतं प्रापम् । तत्र च मदीययोग्यतापत्रादि दर्शनानन्तरमधिकारिभिरनुमतेन मया सहाध्यापकपरिचयपूर्वकं अध्यापकस्थान मङ्गीकृतम् । अथ केचन दिवसा गताः । कस्मिंश्चिद्दिने सायन्तने तन्नगरदिदृक्षया विजयपुर वीथ्यां चरन्नभूवम्। विजयपुराख्यं तन्नगरं अतिविशालं अभिवर्धमानं अत्युन्नताभिः नवनवाभि र्भवनावलीभिः व्याप्तं, नानाविधाभिः आपणपुञ्जसनाथाभिः रथ्याभिः अनेकैः देवालयैश्च

विभूषितं आसीत् । जल-नालिका, उद्यानानि, तन्त्री-वार्ता-पत्रप्रेषणालयः, रक्षाभट-निलयः, सर्वकारीयचिकित्सा-लयः, उन्नतपाठशलाः, कला-शालाः, कर्मागाराणि वैद्युतिक नाटक भवनानि एवमादीनि यानि यानि नगरनागरिकता-चिन्हानि तानि सर्वाण्यपि तत्र अदृश्यन्त। नगराद् बहिः काचन-नदी । प्रकृतिरमणीये तस्या-स्तीरे प्राचीननिर्मितमपि सुधादिभिः धवलितं गभीरं किञ्चन महाभवनम् । वलया-कारयाऽतिदीर्घया प्राकारभित्या तत् आवृतमराजत । भवन-मभितः नानाछायातरवः तदध-स्तात्तत्र तत्र निर्मिताः वितर्दि-काश्च समलक्ष्यन्त । एकत्र स्नानगृहं, अपरत्र भोजनशाला, द्वारे च मलोत्सर्जनस्थलं, भवन-मध्ये विशालः कश्चन प्रार्थना-मण्टपः, अन्यत्र शयनगृहं च स्था-पितान्यभवन् । भवनप्रधान द्वारि "अनाथशरणालयः" इति विले-खितं किमपि सूचनफलकं स्था-पितमभूत् । वृक्षच्छायोपविष्ठाः केचन बालकाः यत्किमपि पठन्तः स्वैरं विहरन्तः आनन्दलोके सञ्चरन्तोऽदृश्यन्त । एतत्सर्वं क्रमेण सोत्सुकं पश्यन्नहं शरणा-लयमुल्लंघ्य गतवान् । मध्येमार्गं पुरातनस्य जीर्णकुड्यस्थ कस्य-चन गृहस्य पुरतः वेदिकायां उपविशन् कश्चन वृद्धोऽदर्शि । जीर्णं मलिनं च वसनं दधानस्य कृशाङ्गस्य तस्य मुखं दीर्घेण-श्मश्रुमङ्कुेन आवृतमभूत् । तन्नेत्रयोस्तु लौकिकानुभवजन्यः वैराग्यभूषितः कश्चित्करुणामयः कटाक्षो न्यवसत् । किंबहुना? जनानुजिघृक्षया वनं परित्यज्य नगरं प्राप्तः योगीन्द्र इव सोऽभासत । तं परितः षड्वर्षीया बालकाः बालिकाश्च दश-संख्याकाः उपविश्य तं पुनः पुनः किमपि पृच्छन्तोऽभवन् । तद्दि-दृक्षावशंवदोऽहमपि तन्निकट-मवाप्य तं प्राणमम् । मज्जल्पन माकर्ण्य सोयं स्थविरः सस्मितं स्वनेत्रसंज्ञयैव मामुपवेष्टु मन्व मन्यत । मदुपवेशनानन्तरं तेन

पृष्ठोहं मदीयं कृत्स्नमपि वृत्तान्तं तस्मै सविनयं न्यवेदयम् । मदुक्तिं सकलामपि मौनेन शृण्वन् सः एवमवोचत् । भद्र! प्रीतोस्मि त्वद्वृत्तान्ताकर्णनेन । अहमप्येतत्स्थलवास्तव्य एव । नगरमेतत् केभ्यश्चनसंवत्सरेभ्यः पूर्वं कुग्रामरूपेणावर्तिष्ट । तदा ग्राममिमं "अर्कवनं" इति जनाः व्यवहरन्ति स्म। गान्धीमहाभागानामागमनानन्तरमेव "विजयपुरम्" इति नाम परिवर्तनं कृतम् । धनिकानां आश्रयेण अत्रत्यानां मादृशानां प्रयत्नेन च क्रमेण अभिवर्धितः अयं संप्रति अनल्पजनावासं प्रधानं किञ्चन नगरं बाभाति । अहं परं प्रारब्धवशात् बन्धुहीनः अपरे वयसि न कुत्रापि गन्तुमिच्छन् अत्रैव कथञ्चिन्निवसन्नस्मि। प्रत्यहं निर्मलचित्तानां एतेषां बालकानां तोषणाय तदभीप्सिताः मज्ज्ञातपूर्वाः कथाः मया कथ्यन्ते । इमे च ताः श्रुत्वा सन्तुष्टाः गृहं गच्छन्ति इति । एतन्निशम्य तच्चरितजिज्ञासुरहं आर्य! अतीते भवज्जीवितकाले जातान् भवदनुभूतान् सङ्घटनाविशेषान् ज्ञातुमुत्सुकोस्मि । यदि भवते रोचते तर्हि प्रोच्यताम् इति तं वृद्धवरं प्रार्थये । सोपि क्षणं मौनमनुतिष्ठन् दीर्घं निश्वस्य शनैः शनैः स्वकीयं जीवितचरितं वक्तुमारेभे—

अशीतिवर्षेभ्यः पूर्वं अस्मिन्नेव नगरे जातोऽहम्। मन्माता प्रियंवदा । पिता तु सत्यमूर्तिनामकः । तौ दम्पती पुत्रस्य मम "दयानिधि" रिति नाम कृत्वा अतीव प्रेम्णा मां अपुषताम् । मत्पितुः पैतृकं वा स्वार्जितं वा भूम्यादिकं नासीत। अत एव सः सभार्यः मया सह ग्राममिमं परित्यज्य दूरस्थितं नगरमागत्य, तत्र केषाञ्चनधनिकबालानां पाठादिकं बोधयन् तल्लब्धेन स्वल्पेन धनेन कुटुम्बं भरति स्म । मन्मातापि भर्तृखेदं असहमाना वित्तेशगृहादिषु पात्रप्रक्षालन गृहसम्मा-

जंनपाकादीन्याचरन्ती यथाशक्ति कुटुंबभरणे साहाय्यमकरोत्। एवं काले गते अहमपि पाठशालां गत्वा विद्याभ्यासमकार्षम्। कक्ष्यायां अध्यापकबोधिताः पाठाः अनवगता अपि तदुक्ताः नीतिकथा एव मन्मानसाह्लादिन्यो बभूवुः। सत्यं वद, धर्मं चर, न हिंस्यात्सर्वा भूतानि इत्येवमादीनि वेदवाक्यान्येव मन्मनोगतानि समपद्यन्त। अनवरतकर्मकरणेन मनश्शान्त्यभावेन च दिने क्षीणः व्याधिग्रस्तश्च सञ्जातः मत्पिता औषधादिसेवनेनापि त्वद्रोगशान्तिः नाभूत्। कस्मिश्चिदह्नि मातरं मां च शोकसागरे निमज्ज्य सः लोकान्तरमगच्छत्। एकाकिनीमज्जननी पतिवियोगदुःखं कथञ्चित् सोढ्वा मत्पोषणासक्ता अभवत्। धनैकमूले जगत्यस्मिन् असहाया रिक्ता सा कियन्तं कालं दुःखिता मां वर्धयेत्? कदाचित्सापि मामिहैकाकिनं परित्यज्य स्वभर्तारमनुससार। मातापितृहीनोऽहं अनाथः अशरणश्च समभवम्। धनाभावात् मदीयां दशाममवगच्छन्तो द्वित्रा बन्धवोपि मां तिरस्कृत्य पलायाम्भूवुः। आवश्यकाहाराभावात्तनिमानं भजन्तं मां दृष्ट्वा कोपि दयालुः कस्मिश्चन धान्यापणे सेवकवृत्तौ नियोजितवान्। आपणस्वामी तु महान् धनिकः वाचालश्च। अत एव सः राजकीयाधिकारिणः सर्वानपि भाषणकौशलेन गूढदानप्रदानेन च वशीकुर्वन् आवश्यकानि वस्तूनि अधिकमूल्यस्वीकारेण व्यक्रीणात्। तण्डुले, शर्करायां, तैले, घृते अन्येष्वपि पदार्थेषु मृत्पाषणखण्डसैकतादीनि सङ्कलय्य अत्युत्तमवस्तूनीमानि इत्युद्घोषयन् दीनेभ्यः क्रेतृभ्यो विक्रीय सर्वकारीयाधिकारिणां कृते तु शुद्धानि वस्तून्येव गूढं प्रेषयामास। आपणाङ्गणे प्रसारितानि शुद्धानि। दास्यमानानि तु सङ्करवन्त्येव। एवं विधाऽधर्मकरणे सहायकास्तु तत्रत्या कर्मकरा एव। (अनुवर्तते)



# नारदविजयम्

रचयिता —

**श्री कूरं तिरुवालि नरसिंहः**
व्याकरण, साहित्यशिरोमणिः,
शिक्षाशास्त्री, पि. ओ. एल्.

[ पूर्वानुबन्धः ]

## अथ तृतीयोऽङ्कः

[ अम्बरात् अवतरन्तम् नारदम् पश्यन्ति जनाः । स नारदः भारते कृत्रिमपुरं नाम नगरे अवततार । तत्र कृतघ्नपापकृन्नामानौ उभौ प्रजा-नायकौ निवसतः । तावुभौ नारदम् पृच्छतः । ]

कृतघ्नः – भवान् कः ?
नारदः – कश्चन पुण्यपुरुषः ।
पापकृत् – तव नाम किम् ?
नारदः – सत्यवादीति ।
कृतघ्नः – (उभौ हसतः) मम नाम कृतघ्नः । एषः मन्मित्रं पाप-
कृत् । अहं तु भूतपूर्वमन्त्री । अयं तु अद्यतनमन्त्री ।
सत्य – नमः युवाभ्याम् । (तावपि प्रणमतः)
पापकृत् – किमर्थं अत्रागतोऽसि ?
सत्य – पुण्यभूमिदर्शनार्थम् ।
कृतघ्नः – एवं सति किमर्थं अत्र अवातरः ?
सत्य – (सविस्मयम्) भूमिरियं पुण्या नास्ति ?

पापकृत् – महानगरस्यास्य नाम ज्ञायते वा भवता ?
सत्य – नैव ।
कृतघ्नः – कृत्रिमपुरमिति अन्वर्थं नाम । (परस्परं विषमचेष्टां कुरुतः)
सत्य – तर्हि युवयोरपि सार्थकं नाम ?
उभौ – (समकाले) (परस्परं पश्यन्तौ) न, न । आवां सत्यसन्धौ, परोपकारिणौ, प्रजानायकौ, देशोद्धारकौ, जननायकसोषलिजसिद्धान्तिनौ वर्तावहे ।
सत्य – अतीव सन्तुष्टोऽहं पुण्यपुरुषयोस्सन्दर्शनेन ।
पापकृत् – भो मित्र! अद्य सायं महती सभा प्रचलिष्यति । तस्याः सभायाः अहमेवाऽध्यक्षः । किंच तदा प्रजाक्षेमनिधिरपि (Social Welfare Fund) संपादनीयोऽस्ति । तस्मात् कारणात् विरमाम्यहमितः (पापकृत् गच्छति, तमेव पश्यति कृतघ्नः)
सत्य – किं भगवन् पश्यति भवान् ?
कृतघ्नः – स तु सार्थकनामधेयः ।
सत्य – किम् ? (अज्ञातवन्नटति)
कृतघ्नः – पापकृत् कथं व्युत्पत्तिः कथय ।
सत्य – यः पापं करोति स पापकृत् ।
कृतघ्नः – (नारदं आलिङ्गति) सम्यगुक्तं भवता । अयं तु साक्षात् पापकर्ता, साधुजनद्रोही, परोपकारी, कुटिलश्च भवति ।
सत्य – एवम् ? (विस्मयति)
कृतघ्नः – अक्षरशः सत्यम् ।
सत्य – दर्शने अतीव साधुवत् द्योतते ।
कृतघ्नः – (विहस्य) नूतनः खलु भवान् लोकस्यास्य कृते ।
सत्य – आम् ? किमर्थम् ? कस्मिन् काले ?

कृतघ्नः – पश्य, त्वन्नाम किमुक्तम् ? (चिन्तयति)

सत्य – सत्यवादीति मम नाम ।

कृतघ्नः – (ईषद् विचिन्त्य) माऽस्तु तन्नाम इतःपरम् ।

सत्य – तर्हि मम संकेतः कथम् ?

कृतघ्नः – अद्य प्रभृति त्वन्नाम 'समयवादी'ति भवतु ।

सत्य – किमर्थम् ?

कृतघ्नः – हेतुं प्रकाशयामि । अस्मिन् प्रपञ्चे सन्ति बहवः वेषधारिणः । तैस्साकं जीवितं कर्तव्यं त्वया । अतः समयानुगुणं यत्किमपि वक्तव्यम् । तस्मात्कारणात् त्वदाख्या इतःपरं समयवादीति भवतु ।

समय – तथैव मित्रवर, के वेषधारिणः? कीदृशं वेषं धरन्ति ते?

कृतघ्नः – (विहस्य) त्वमधुना कुत्र वससि ?

समय – मानवलोके ।

कृतघ्नः – नैव ।

समय – तर्हि लोकस्याऽस्य नामान्तरं विद्यते वा ?

कृतघ्नः – मादृशराजकीयविदुषां दृष्टचा अस्य लोकस्य नाम न मानवलोकः ।

समय – किं तर्हि ।

कृतघ्नः – मायालोकः ।

समय – (अक्षिणीस्पन्दं विस्मरन्) कथमस्य नाम्नः सार्थकत्वम्?

कृतघ्नः – हे अजातशत्रो! अत्र व्याघ्रचर्मधारिणः पशवः गोचर्माच्छादितव्याघ्राश्च सन्ति । अतः लोकोऽयं भवादृशानां कृते मायालोक एव खलु ।

समय – न स्फुरति मे सखे !

कृतघ्नः - त्वं वयसि मत्सदृशः । परं बुद्धचा अनुभवेन च अतीव बालः ।

समय - भवदुक्तिः सजीवसत्यम्, परं भवतां गोव्याघ्रव्यवहारः न ज्ञायते मया ।

कृतघ्नः - (विहस्य) अत एव धूमशकटप्रयाणानुमतिपत्ररहित-वनेचरः (Train-Ticketless-Traveller) यथा पश्येत् परिशोधकं(Ticket-Collector)तथा उद्वीक्ष्यसि मामधुना। (एकवारं हेळनेन दृष्टिं प्रसार्य) जानीहि त्वं मद्भाषणे निगूहितमस्ति महासत्यम् ।

समय - उद्बोधयन्तु मे कृपया।

कृतघ्नः - तथैव शृणु । अत्र गोव्याघ्रपदं तु लक्षणया उपयुक्तम् । पदद्वयेनापि द्विपादीरेव ग्राह्यः, न तु चतुष्पाज्जन्तु-विशेषः ।

समय - एवं सति मानवेष्वपि केषांचित्कृते शृङ्गत्वं स्यान्नाम ।

कृतघ्नः - तावता तिष्ठस्व प्रभो! केषांचन आहारः घ्रासः इति मा वद ।

समय - क्षन्तव्योऽयं जनः । अज्ञातप्रसङ्ग एतत् ।

कृतघ्नः - भवतु नाम । अधिकप्रसङ्गो नास्ति चे द्वरम् । हे सखे! त्वादृशाः पुण्यपुरुषाः नीरस्य क्षीरस्य च भेदं न विदन्ति । मदीयगोव्याघ्रपदलक्षणायाः काचन लक्षणा वर्तते ।

समय - केयम् ?

कृतघ्नः - गोत्वं, व्याघ्रत्वं साक्षात् मानवजातिषु न लक्षणया आरोप्यते । परन्तु मानवगुणेषु आरोप्यते । अर्थात् नरेषु केचन प्रकृत्या साधवः । किन्तु ते कारणान्तर-वशात् अतीव दुष्टाः इव नटन्ति । ये एवं कुर्वन्ति ते व्याघ्र चर्मावृत पशव इत्यर्थः । एवमेव केचन जन्मतः धूर्ताः भवन्ति । परन्तु समाजे अतीव साधवः इव अभिनयन्ति । ईदृशास्तु गोचर्माच्छादितव्याघ्राः इति ज्ञातव्यम् ।

(अनुवर्तते)



# श्रीरामानुजाचार्यः

"अवरः"

---

## १. जननम् –

दक्षिणभारते मदरास्नगरात् काञ्चीपुरमार्गे श्रीपेरुम्बूदूरु नाम किञ्चित्पट्टणमस्ति । तस्य "भूतपुरी" इत्यपि नामान्तरम् । तत्र आसूरु केशवसोमयाजी नाम ब्राह्मणोत्तमः आसीत् । तस्य पत्नी कान्तिमती नाम्नी । सा यामुनाचार्यस्य (आळवन्दार्) पौत्री, श्रीशैलपूर्णस्य (तिरुमलनम्बि) भगिनी च । (क्री. श. १०१७ तमे वर्षे) ४११७ तमे कल्यब्दे पिङ्गलनामसंवत्सरे मेष मासे शुक्लपञ्चम्यां आरुद्रानक्षत्रयुक्त गुरुवासरे कर्कटलग्ने केशव-सोमयाजिः कान्तिमत्यां पुत्ररत्नं समजनि । नामकरणोत्सवे समागतेन मातुलेन श्रीशैलपूर्णेन भागिनेयस्य शिशोः "लक्ष्मण" इति नाम कृतम् । तदेव नाम 'रामानुज' इति नामान्तरस्य भुवन-विख्यातस्य मार्गदर्शक मभूत् ।

## २. विद्याभ्यासः –

बाल्य वयसि एव रामानुजः पितृविहीन आसीत् । गोविन्द-भट्टाख्येन (एम्बार्) ज्ञातिना सह रामानुजः काव्यालंकारादि-नानाविधशास्त्रविद्याभ्यासं कुर्वन्नासीत् । किञ्चित्प्रौढे वयसि काञ्चीपुरे प्रसिद्धपण्डितस्य यादवप्रकाशस्य सविधे वेदान्ताध्ययनं कर्तु मारेभे । तदा रामानुजस्य प्रतिभां श्रुत्वा श्रीरंगे विद्यमानः यामुनाचार्यः (आळवन्दार्) निजपौत्री-पुत्रं द्रष्टुकामस्सन् वेषान्तर-तिरोहित-निजरूपः कांचीपुर मागत्य नयनानन्दकरं रामानुजं विलोक्य प्रमुदितोऽभवत् । आत्मनोऽनन्तरं श्रीरंगपीठस्य रामानुज एव उत्तमाधिकारीत्यमन्यत ।

यादवप्रकाशः अद्वैतसिद्धान्तवादी । तेन क्रियमाणानि शास्त्रव्याख्यानानि रामानुजस्य अरोचकान्यासन् । कदाचित् रामानुजः गुरोः यादवप्रकाशस्य अभ्यङ्गं कुर्वन्नासीत् । तदा गुरुः रामानुजाय "कप्यासं पुंडरीकाक्ष" मिति वाक्यं नीचोपमानपुरस्सरं विवृण्वन्नास्त । भगवतो नेत्रसौन्दर्यस्य गुरुणा यादवप्रकाशेन प्रतिपादितं नीचं कपिपृष्ठौपम्य मसहमानो रामानुजः स्वान्तरन्तरेव रुरोद । बाष्पाकुलयो स्तस्याक्ष्णोः कोष्णं ऊरुभागे निपतितं अश्रुबिन्दुं दुःखसूचकं विलोक्य गुरुः शिष्यमपृच्छत् "किमर्थोऽय मश्रुपातो रामानुज!" इति । रामानुजः प्राह – "गुरो! तत्र भवता भगवतः पुण्डरीकाक्षस्य नेत्रसौन्दर्ये नीचं कपिपृष्ठसादृश्यं किल प्रतिपादितमिति दुःखितोऽस्मि" इति ।

गुरुः - "अलं दुःखेन! वाक्यं हि तथा श्रूयते । श्रुतस्य अन्यार्थकल्पनायाः अन्याय्यत्वात् यथाश्रुतार्थ एव गृहीतो मया ।

शिष्यः-निरस्तनिखिलहेयगुणस्य अनन्तकल्याणगुणैकधाम्नः भगवतः श्रीमन्नारायणस्य नेत्रसौन्दर्ये प्रतिपादनीयेऽरुणारुणतामरससादृश्यं हि समीचीनं संगच्छते ।

गुरुः - (सरोषं) मदीयं व्याख्यानं आक्षिपसि! त्वदभिमतार्थस्य वाक्ये कथं वाऽन्वयः ?

रा - (सविनयं) श्रूयतां भो! कं नाम जलं, तत्पिबतीति कपिः पद्मनालः प्रोक्तः, तदुपरि आस्त इति कप्यासं पुण्डरीक मुच्यते । तथा च पुण्डरीके इव अक्षिणी यस्य स भगवान् अरुणारुणतामरससदृशनेत्रसौन्दर्यवानिति सिद्ध्यति । एवं पुण्डरीकाक्षस्य विश्रुतार्थे संभवति । अगतिकत्वविधया कुव्याख्यायाः अन्याय्यत्वात् भवदुक्तं न सूष्ठूक्तमिति मन्ये ।

यादवप्रकाशः नवं परिभवमात्मनः कृत ममन्यत । ततःप्रभृति गुरोः शिष्यः पार्श्वे शूलमिवाऽऽसीत् । एकदा तत्प्रान्तप्रभोः दुहितरं भूतः कश्चन आविशन् पीडयति स्म । यादवप्रकाशः तं भूत-मुच्चाटयितुं प्रवृत्तः । तस्य मन्त्रो वा तन्त्रो वा भूतस्य पुरतः अकिञ्चित्कर आसीत् । प्रत्युत भूतः प्राह – "यदा रामानुजः समेत्य मां इमां विहाय गन्तु माज्ञापयति तदाऽहं निर्गमिष्यामि" इति । तथैव रामानुजसंदर्शनेन प्रभोः पुत्री भूतपीडाविमुक्ता आसीत् । इदमपि गुरोः यादवप्रकाशस्य क्षते क्षार इवाऽऽसीत् । असूयाप्रचोदितो गुरुः शिष्यं रामानुजं घातयितुं प्रवृत्तः । काशीं प्रस्थापितैः शिष्यैः तत्र गङ्गायां रामानुजं पातयित्वा व्यापादयितुं तन्मरणमाकस्मिकसंभवमिति प्रकटयितुं च व्यवस्था कृता गुरुणा । मध्येमार्गं एतद्रहस्यं विज्ञाय गोविन्दभट्टः रामानुजाय न्यवेदयत् । गुरो द्रोहचिन्तनं विदित्वा रामानुजः अर्धरात्रे एकाकी सतीर्थ्यान् विहाय आत्मरक्षणेच्छया ततः प्रस्थितः । मार्गमध्ये व्याध-स्सद्वितीयः तस्य साह्य मारचयत् । काञ्चीपुरपरिसरप्रदेश मुप-यातेषु तेषु व्याधस्य भार्या पिपासार्दिता पानीय मयाचत । समीप-स्थात् कूपात् जल मानेतुं गतो रामानुजः यावत् प्रतिनिवृत्तः ताव-त्तन्मिथुनं अदृश्यतां गतम् । तस्मिन्नेव उषःकाले वरदराजस्वामिनः आलयशिखरं रामानुजस्य चक्षुर्गोचर मभूत् । श्रीमन्नारायण एव व्याधमिथुनरूपेण गतार्धरात्रात् आत्मानं ररक्षेति दृढं विश्वसन् रामानुजः प्रत्यहं तस्मादेव कूपात् कुम्भपूर्णमुदकं आलयकैङ्कर्याय नयन्नास्त ।

## ३. गृहस्थाश्रमः

मातुराज्ञानुसारेण रामानुजः गृहस्थाश्रमं स्वीकृत्य काञ्ची पुरे प्रतिवसति स्म । रामानुजस्य अत्यन्ताभिमतः आचार्यसदृशः

तिरुक्कच्चिनम्बि नामा (काञ्चीपूर्णः) भागवतोत्तमः वरदराज-स्वामिनः आलये कैङ्कर्यं कुर्वन्नासीत्। तस्यैव प्रपन्नोत्तमस्य संदेश-मनुसृत्य रामानुजोऽपि आलये स्वामिकैङ्कर्ये प्रवर्तमान आसीत्।

एवं स्थिते श्रीरङ्गे यामुनाचार्यस्य (आळवन्दारस्य) अन्तिमसमयः आसन्नः। तदनन्तरं श्रीरंगपीठाधिपत्यं स्वीकर्तुं रामानुज एव उत्तमाधिकारीति यामुनार्याभिमतं विज्ञाय तच्छिष्याः ज्ञानवयोवृद्धं "पेरियनम्बि" नामानं (महापूर्णं) यामुनशिष्याग्रेसरं काञ्चीपुराद्रामानुज मानेतुं प्रेषयामासुः। पेरियनम्बिरपि काञ्ची-मेत्य वरदराजस्वामिसन्निधौ कीर्तनविशेषं गातु मारेभे। तत्कीर्तन-गानमाकर्ण्य रामानुजः पेरियनम्बि "केन वा इदं कीर्तनं प्रणीत" मित्यपृच्छत्। श्रीरङ्गे विराजमानः यामुनाचार्यः कीर्तनमिदं प्रणि-नायेति पेरियनम्बि रवोचत्। तत्कीर्तनोपगानश्रवणसमयादारभ्य रामानुजस्य यामुनाचार्यसंदिदृक्षाऽजागरीत्। अतः शोभने मुहूर्ते काञ्चीपुरात् सः श्रीरङ्गं प्रति प्रस्थितः पेरियनंबिप्रभृतिभिस्साकम्। परन्तु श्रीरङ्गं प्राप्तवतामेव तेषां यामुनाचार्यस्य परमपदप्राप्तिः श्रुता। तस्य मृतदेहे दक्षिणहस्ते तिस्रोऽङ्गुल्यः संकुचिता आसन्। एव मंगुलिसंकोचस्य किं कारणमिति रामानुजेन पृष्टाः तच्छिष्याः प्राहुः – "गुरो रभिलाषाः त्रयोऽपूर्णा आसन्। प्रथमस्तु ब्रह्म-सूत्राणां भाष्य-प्रणयनाभिलाषः, द्वितीय स्तावत् शठकोप तदीय वाङ्मये च भक्तिप्रपत्तिनिरूपणाभिलाषः, तृतीयः पुनः पुराण-रत्न (विष्णुपुराण) प्रणेतुः श्रीपराशरभट्टारकस्य श्रीवेदव्यासस्य च स्मरणकारणस्थापनाऽभिलाषः इत्येवं आचार्यस्य त्रयोऽभिलाषाः अपूर्णा आसन्। तत्सूचनार्थमेव अन्तिमसये आचार्येण अंगुलित्रय-संकोचः कृतः" इति। तच्छ्रुत्वा रामानुजः "आचार्याभिलषितं तत्त्रितयमहं पूरयिष्यामि" इति प्रतिजज्ञे। एवं रामानुजप्रतिज्ञा-नन्तरं संकुचितं यामुनाचार्यस्य अंगुलित्रितयं सुखप्रसारित मासीत्।

(अनुवर्तते)

Please mention your membership Number for
easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. II.*
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५-००

## प्रहेलिका

अपदो दूरगामी च साक्षरो न च पण्डितः ।
अमुखः स्फुटवक्ता च यो जानाति स पंडितः ।।

( लेखपत्रम् )

वने जाता वने त्यक्ता वने तिष्ठति नित्यशः ।
पण्यस्त्री न तु सा वेश्या यो जानाति स पण्डितः ।।

( नौका )



Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan, (in-charge)
at Vijaya Press, Chittoor, (A. P.) C. 1500.